# अथ कालभैरवाष्टाकम्

देवराजसेव्यमानपावनांघ्रिपंकजम् ,
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् ।
नरदादियोगिवृन्दवंदितं दिगम्बरं,
काशिकापुराधिनाथकालभैरवं भजे ॥१॥
भानुकोटिभास्करं भवाब्धितारकं परं,
नीलकण्ठमीप्सितार्थदायकं त्रिलोचनं ।
कालकालमम्बुजाक्षमक्षशूलमक्षरं ,
काशिकापुराधिनाथकालभैरवं भजे ॥२॥
शूलटंकपाशदंडपाणिमादिकारणं ,
श्यामकायमादिदेवमक्षरं निरामयं ।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं ,
काशिकापुराधिनाथकालभैरवं भजे ॥३॥
भुक्तिमक्तिदायकं प्रशस्तचारुविग्रहं ,
भक्तवत्सलं स्थितं समस्तलोकविग्रहं ।
विनिक्वणन्मनोज्ञहेमकिंकिणीलसत्कटिं ,
काशिकापुराधिनाथकालभैरवं भजे ॥४॥
धर्मसेतुपालकं त्वधर्ममार्गनाशकं,
कर्मपाशमोचकं सुशर्मदायकं विभुम् ।
स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलं,
काशिकापुराधिनाथकालभैरवं भजे ॥५॥
रत्नपादुकाप्रभाभिरामपादयुग्मकं ,
नित्यमद्वितीयमिष्टदैवतं निरञ्जनम् ।

मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं ,
काशिकापुराधिनाथकालभैरवं भजे ॥६॥
अट्टहासभिन्नपद्मजाण्डकोशसन्ततिं ,
दृष्टिपातनष्टपापजालमुग्रशासनम् ।
अष्टसिद्धिदायकं कपालमालिकन्धरं ,
काशिकापुराधिनाथकालभैरवं भजे ॥७॥
भूतसङ्घनायकं विशालकीर्तिदायकं ,
काशिकावासलोकपुण्यपापशोधकं विभुम् ।
नीतिमार्गकोविदं पुरातनं जगत्पतिं ,
काशिकापुराधिनाथकालभैरवं भजे ॥८॥
कालभैरवाष्टकं पठन्ति ये मनोहरं ,
ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम् ।
शोकमोहदैन्यलोभकोपतापनाशनम् ,
ते प्रयान्ति कालभैरवाङ्घ्रिसंनिधिं ध्रुवम् ॥९॥
इतिश्रीमच्छङ्कराचार्यविरचितं श्रीकालभैरवाष्टकस्तोत्रं संपूर्णम्

## श्रीशिवाष्टकम्

पुरारीः कामारिर्निखिलभयहारी पशुपति-
र्महेशो भूतेशो नगपतिसुतेशो नटपतिः ।
कपाली यज्ञाली विबुधदलपाली सुरपतिः ,
सुराराध्यः शर्वो हरतु भवभीतिं भवपतिः ॥१॥
शये शूलं भीमं दितिजभयदं शत्रुदलनं ,
गले मौण्डीमालां शिरसि च दधानः शशिकलाम् ।
जटाजूटे गङ्गामघनिवहभङ्गां सुरनदीं ,

सुराराध्यः शर्वो हरतु भवभीतिं वपतिः ॥२॥
भवो भर्गो भीमो भवभयहरो भालनयनो ,
वदान्यः सम्मान्यो निखिलजनसौजन्यनिलयः ।
शरन्यो ब्रह्मण्यो  विबुधगणगण्यो गुणनिधिः ,
सुराराध्यः शर्वो हरतु भवभीतिं भवपतिः ॥३॥
त्वमेवेदं विश्वं सृजति सकलं ब्रह्मवपुषा,
तथा लोकान् सर्वानवसि हरिरूपेण नियतम् ।
लयं लीलाधाम त्रिपुरहररूपेण कुरुषे ।
त्वदन्यो नो कश्चिज्जगति सकलेशो विजयते ॥४॥
यथा रज्जौ भानं भवति भुजगस्यान्धकरिपो ,
तथा मिथ्याज्ञानं सकलविषयाणामिह भवे ।
तवमेकश्चित्सर्गस्थितिलयवितानं वितनुषे ,
भवेन्माया तत्र प्रकृतिपदवाच्या सहचरी ॥५॥
प्रभो साऽनिर्वाच्या चितिविरहिता विभ्रमकरी ,
तवच्छायपत्त्य सकलघटनामञ्चति सदा ।
रथो यन्तुर्योगाद् व्रजति पदवीं निर्भयतया ,
तथैवासा कर्त्री त्वमसि शिव साक्षी त्रिजगताम् ॥६॥
नमामि त्वामीशं सकलसुखदातारमजरं ,
परेशं गौरीशं गणपतिसुतं वेदविदितम् ।
वरेण्यं सर्वज्ञं भुजगवलयं विष्णुदयितं ,
गणाध्यक्षं दक्षं प्रणतजनतापार्तिहरणम् ॥७॥
गुणातीतं शम्भुं बुधगणमुखोद्गीतयशसं ,
विरूपाक्षं देवं धनपतिसखं वेदविनुतम् ।

विभुं नत्वा याचे भवतु भवतः श्रीचरणयो-
र्विशुद्धा सद्भक्तिः परमपुरुषस्यादिविदुषः ॥८॥
शङ्करे यो मनः कृत्वा पठेच्छ्रीशङ्कराष्टकम् ।
प्रीतस्तस्मै महादेवो ददाति सकलेप्सितम् ॥९॥
श्रीशङ्कराचार्य विरचितम्